मापगाया तमूपात्साम्नः । सत्या व आशिषः सन्तु सत्या आकूतयः । ऋतं च सत्यं च वदत । बृहस्पते ऽनुमत्यों भूर्जेनदिन्द्रवन्त इत्युक्त्वा स्तुतेति प्रथमया स्वरमात्रया प्रसौति । मध्यमया माध्यंदिने । उत्तमया तृतीयसवने । ४ । भुव इति माध्यंदिने । स्वरिति तृतीयसवने । ५ । उक्थ्यादिष्वहीने चों भूर्भुवः स्वर्जनवृधत्कर्द्रुहन्महत्तच्छमोमिति च । ६ । विष्पर्धमानयोः सवृतसोमयोः स्तोमभागानामुपर्युपरि स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः सवे । बृहस्पतिं वः प्रजापतिं वो वसून्वो देवान् रुद्रान्वो देवानादित्यान्वो देवान्साध्यान्वो देवानाप्त्यान्वो देवान्विश्वान्वो देवान्सर्वान्वो देवान्विश्वतस्परि हवामहे । जनेभ्यो ऽस्माकमस्तु केवल इतः कृणोतु वीर्यमिति जपन्परेषां ब्रह्माणमवेक्षेत । ७ । स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वत् । ऊर्जे मह्यं स्तुतं दुहामा मा स्तुतस्य स्तुतं गमेत् । इन्द्रियावन्तो हवामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याशीर्देवेष्वस्तु । ब्रह्मवर्चसं मा गमयेदिति स्तोत्रमनुमन्त्रयते । ८ । इन्द्रस्य कुक्षिरित्यासिक्ते सोमे पूतभृतम् । ९ । स्तुते बहिष्पवमाने वाचयति श्येनो ऽसीति । वृषासीति माध्यंदिने । ऋभुरसीत्यार्भवे । १० । ब्राह्मणोक्तानित्यनुब्राह्मणिनः । ११ । अथाध्वर्युराहाग्नीदग्नीन्विहर बर्हि स्तृणीहि परोडाशानलंकुर्विति । १२ । ॥ ७ ॥ १७ ॥

आग्नीध्र आग्नीध्रीयादङ्गारैर्द्वे सवने विहरति । शलाकाभिस्तृतीयसवनम् । प्रत्यङ्मुखो होतृमैत्रावरुणब्राह्मणाच्छंसिपो-

तूनेष्ट्रच्छावाकानां धिष्ण्येषु मार्जालीये । १ । तत्रैव प्रत्यानयति । २ । अनु पृष्ठ्यामास्तीर्य पुरोडाशानलंकुरुते । ३ । ये अग्नयो विहृता धिष्ण्याः पृथिवीमनु । ते नः पान्तु ते नो ऽवन्तु तेभ्यो नमस्ते नो मा हिंसिषुरिति विहृताननुमन्त्रयते । उत्तरयोः सवनयोः पुनर्मैत्विन्द्रियमिति । आहवनीयमपरेणोत्क्रम्य । ४ । प्रवृताः प्रवृताहुतीर्जुहुति जुष्टो वाचे भुयासं जुष्टो वाचस्पतये देवि वाग्यद्वाचो मधुमत्तमं तस्मिन्मा धाः स्वाहा । वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहेति । मनसा चतुर्थीम् । ५ । सप्ताहुतीरित्येके सरस्वते स्वाहा महोभ्यः संमहोभ्यः स्वाहा । ऋचा स्तोममिति । ६ । वपामार्जनान्त उपोत्थाय दिवस्पृष्ठ इत्यादित्यमुपतिष्ठन्ते । ७ । मा प्र गामेत्याव्रज्याहवनीयं निर्मथ्यं यूपमादित्यमग्नयः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात मामग्नयः पिपृत मामग्नयो गोपायत मा नमो वो ऽस्तु मा मा हिंसिष्टेति । ८ । आग्नीध्रीयमुत्तरेण सदो ऽभिव्रजन्ति । ९ । धिष्ण्यवन्तो यजमानश्च पूर्वया द्वारा प्रसर्पन्ति । अपरे ऽपरया । १० । सदः प्रसृप्स्यन्तो धिष्ण्यान्नमस्कुर्वन्ति धिष्ण्येभ्यो नमो नम इति । ११ । द्रष्ट्रे नम इति द्रष्टारं प्रसर्पन्तः । उपश्रोत्रे नम इत्युपश्रोतारम् । १२ । चात्वालोत्करशामित्रौवध्यगोहास्तावाग्नीध्रीयाच्छावाकवादं मार्जालीयं स्वं धिष्ण्यानन्यांश्चोपतिष्ठन्ते ऽग्नयः सगरा स्थेति । १३ । उर्वन्तरिक्षं वीहीति सदो ऽभिमृशन्ति । देवीर्द्वारो मा मा संताप्तं लोकं मे लोककृतौ कृणुतमिति द्वार्ये । १४ । प्रसृप्यानुख्यात्रे नम इत्यनुख्यातारम् । उ-

त्तरेण धिष्ण्यान्परिक्रम्य स्वंस्वं धिष्ण्यमभिप्रसृप्ता उपद्रष्ट्रे न-म इत्युपद्रष्टारम् । १५ । उपविश्य जपन्त्यभि त्वेन्द्रेति स्तोत्रम् । १६ । यजमानः सदस्यो ब्रह्माणं दक्षिणेन स्तोत्रानुमन्त्रणा-ज्जनदिति मनसा । १७ । विसंस्थिते यथाधिष्ण्यमुत्तरेण पू-र्वया द्वारा निष्क्रामन्ति । मैत्रावरुणधिष्ण्यमधिष्ण्यवन्तः । १८ । ॥ ८ ॥ १८ ॥

सवनीयपुरोडाशानामैन्द्रान् । १ । द्विदेवत्यानामैन्द्रवायव-स्य होमौ वायुरन्तरिक्षस्येन्द्रवायू इति । २ । मैत्रावरुणस्य मित्रावरुणौ वृष्ट्या इति । ३ । आश्विनस्याश्विना ब्रह्मणेत्य-र्धर्चेन । ४ । प्रस्थितैश्चरिष्यन्नध्वर्युः संप्रेष्यति होतर्यज प्रशास्त-र्ब्राह्मणाच्छंसिन्पोतर्नेष्टरग्नीदिति । ५ । इन्द्र त्वा वृषभं वयमि-ति ब्राह्मणाच्छंसी यजति । उत्तराभ्यां पोत्राग्नीध्रौ । ६ । या-ज्यानामन्तः प्लवते । ७ । ये३ यजामहे वौ३षडित्याद्यन्तावा-दिप्लुतावनवानम् । ८ । प्रातःसवने वषट्कृत्य वागोजः सह ओजो मयि प्राणापानावित्यनुमन्त्रयते । ९ । सोमस्याग्ने वी-हीत्यन्तप्लुतेनानुवषट्कुर्वन्ति । १० । शुक्रमन्थिचमसहोमानैन्द्रा-निन्द्रो दिव इति । ११ । अनुवषट्काराणामा देवानामित्यनु-होमांश्च मैत्रावरुणमैन्द्रं मारुतं त्वाष्ट्रमाग्नेयम् । १२ । अग्नी-धेऽध्वर्युराहायाडग्नीदिति । अयाडित्यग्नीत् । १३ । पूर्ववदि-डाभक्षः । १४ । सदसि सोमान्भक्षयन्त्युपहूताः प्राशित्रवत् । १५ । प्रतीक्ष्य प्रतिगृह्याग्निहुतस्येन्द्रपीथस्येन्दोरिन्द्रियावतः । यो भक्षो गोसनिरश्वसनिर्धनसनिः प्रजासनिर्लोकसनिः । त-

स्य त उपहूतस्योपहूतो भक्षयामि गायत्रेण छन्दसा तेजसा ब्राह्मणवर्चसेनेति । १६ । त्रैष्टुभेनेति माध्यंदिने । जागतेनेति तृतीयसवने । अनुष्टुप्छन्दसेति पर्यायेषु । पङ्क्तिच्छन्दसेति संधिचमसेषु । अतिच्छन्दसेत्यप्तोर्यामिण । १७ । भक्षित आत्मानं प्रत्यभिमृशन्ति

शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः ।

सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥

हिन्वा मे गात्रा हरिवो गणान्मे मा व्यरीरिषः ।

शिवो मे सप्तर्षीनुपतिष्ठ मामेवा माभिरभिगा इति ॥ १८ ।

चमसानाप्याययन्त्या प्यायस्व सं ते पयांसीति । १९ । तत्र श्लोकः ।

पञ्चैव कृत्वश्चमसान्यज्ञ आप्याययेत्कविः ।

आज्ये मरुत्वतीये च प्रस्थिताश्चापि सर्वश इति ॥ २० ।

अच्छावाकचमसहोममैन्द्राग्नम् । २१ । यद्यग्नन्यामीध्रीये ।२२। सदस्युपविष्टा यथाप्रैषमृतूनयजन्ति मरुतः पोत्रादिति । २३ ।

॥ ९ ॥ १९ ॥

प्रथमोत्तमाभ्यां पोता । द्वितीययाग्नीध्रः । तृतीयया ब्राह्मणाच्छंसी । १ । यजमानो ऽतिप्रेष्यति होतरेतद्यजेति । २ । नानुवषट्कुर्वन्ति । ३ । तत्र श्लोकः ।

द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः ।

आदित्यग्रहसाविचावेते नानुवषट्कृता इति ॥ ४ ।

ऋतुहोमानैन्द्रं मारुतं त्वाष्ट्रमाग्नेयमैन्द्रं मैत्रावरुणं चतुरो द्राविणोदसानाश्विनं गार्हपत्यम् । ५ । ऋतुपात्रे भक्षयन्ति लिम्पन्ति वावजिघ्रन्ति वा को ऽसि यशो ऽसि यशोदा असि यशो मयि धेहीति । ६ । नाराशंसांस्तूष्णीं प्रतिगृह्य भक्षयन्ति नराशंसपीतस्य देव सोम ते नृभिःष्टुतस्य मतिविदः । ऊमैः पितृभिर्भक्षितस्योपहूतस्योपहूतो भक्षयामीति । ७ । ऊर्वैरिति माध्यंदिने । काव्यैरिति तृतीयसवने । ८ । मनो न्वा हुवामहीति मन उपाह्वयन्ते । ९ । पञ्चकृत्वो नाराशंसान्भक्षयन्ति । १० । तत्र श्लोकः ।

पञ्चैव कृत्वश्चमसान्नाराशंसेषु भक्षयेत् ।

होतुः पूर्वेषु शस्त्रेषु यानि प्रागाग्निमारुतादिति । ११ ।

आज्यशस्त्रादैन्द्राग्नम् । १२ । होत्रे प्रउगस्तोत्राय प्रसौति प्रेतिरसि धर्मणे त्वा धर्मं जिन्व । मैत्रावरुणायान्वितिरसि दिवे त्वा दिवं जिन्व । ब्राह्मणाच्छंसिने संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व । अच्छावाकाय प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्वेति । १३ । प्रउगशस्त्राद्वैश्वदेवम् । मैत्रावरुणस्य मैत्रावरुणम् । ब्राह्मणाच्छंसिन ऐन्द्रम् । अच्छावाकस्यैन्द्राग्नम् । १४ । ब्राह्मणाच्छंस्युत्तमात्प्रतीहारात्त्रिर्हिङ्कृत्य शंसावोमित्यध्वर्युमाह्वयते । १५ । हिङ्कारमनुरूपायोक्थमुखाय परिधानीयायै प्रगाथाय च । १६ । माध्यंदिने ऽयोनय एके । १७ । अध्वर्यो शंसावोमिति स्तोत्रियाय । अध्वर्यो शंशंसावोमिति तृ-

तीयसवने । १८ । आहावेषु शंसावो दैवेत्यध्वर्युः प्रतिगृणाति । १९ । ओथामो दैवेत्यवसाने । ओमोथामो दैवेति प्रणवे । ओमिति शस्त्रान्त उक्थसंपत्सु । २० । ओमुक्थशा यजोक्थशा इति साम्ना शस्त्रमुपसंतनोत्यर्धर्चशो मन्द्रया वाचा । बलीयस्या माध्यंदिने । बलिष्ठतमया तृतीयसवने । उत्तरिण्योत्तरिण्योत्सहेदा समापनात् । २१ । ॥ १० ॥ २० ॥

आ याहि सुषुमा हि त आ नो याहि सुतावत इति स्तोत्रियानुरूपौ । १ । अयमु त्वा विचर्षण इत्युक्थमुखम् । उद्वेदभि श्रुतामघमिति पर्यासः । उत्तमा परिधानीया । २ । त्रिष्प्रथमां त्रिरुत्तमामन्वाह । ३ । अर्धर्चशस्य ऋगन्तं प्रणवेनोपसंतनोति स्वरादिमपनीय । पच्छःशस्ये ऽर्धर्चान्तं शस्त्रान्तं मकारान्तेनैव । ४ । शस्त्रोक्थं वाचीत्याह । उक्थं वाचीन्द्रायेति माध्यंदिने । उक्थं वाचीन्द्राय देवेभ्य इति तृतीयसवने । ५ । उक्थसंपदः परिधानीयोत्तरा याज्या । ६ । अच्छावाकभक्षादग्निः प्रातःसवने श्येनो ऽसि यथा सोमः प्रातःसवन इति यथासवनमाज्यं जुहोति । ७ । संस्थितहोमान् । ८ । संस्थितेसंस्थिते सवने वाचयति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति । ९ । प्रेषिता माध्यंदिनायोदुम्बरीमभ्यपरया द्वारा निष्क्रम्याग्नीध्रीयात्सर्पन्ति । यजमानः पूर्वया । १० । पुरस्ताद्धोमान् । ११ । उक्तमभिषवादि । १२ । पवमानाय सदः प्रसर्पन्ति । १३ । आमन्त्रितः प्रस्तौति विष्टम्भो ऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेति । १४ । विहरणे धिष्ण्यवान्बहिष्ठे-

ङ्घिष्ण्यमभ्येत्य परि त्वाग्न इति जपति । १५ । ब्रह्मा च । १६ । दीक्षितो बहिर्वेद्यभ्याश्रावणे ऽस्तमये ऽभ्युदये वाग्यय उपाह्वयध्वमिति । १७ । आतं मन्य इति दधिघर्महोमम् । १८ । घर्मवद्भक्षः । १९ । रसप्राशन्या पशुपुरोडाशस्य । २० । एवा पाहीति प्रस्थितयाज्या । २१ । प्रस्थितहोमानैन्द्रान् । २२ । गार्हपत्ये दाक्षिणहोमावुदु त्यं चित्रं देवानामिति । २३ । हिरण्यहस्तो यजमानो बहिर्वेदि दक्षिणा आयतीरा गाव इति प्रत्युत्तिष्ठति । २४ । हिरण्यमात्रेयाय ददाति । आग्नीध्रायोपबर्हणम् । २५ । अग्रेण गार्हपत्यं जघनेन सदो ऽन्तराग्नीध्रीयं च सदश्च चात्वालं चोदीचीर्दक्षिणा उत्सृज्यमानाः सं वः सृजन्त्विति द्वाभ्यामनुमन्त्रयते । २६ । ॥ ११ ॥ २१ ॥

यस्यां पूर्वे भूतकृत इति भागलिः । इहेदसाथेति कौशिकः । १ । अन्ततः प्रतिहर्त्रे देयम् । २ । मरुत्वतीयहोममिन्द्रो मा मरुत्वानिति ।३। शस्त्रयाज्याया होत्रादिभ्यः प्रसौति प्रवास्यह्ने त्वाहर्जिन्व । अनुवासि रात्र्यै त्वा रात्रिं जिन्व । उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व । प्रकेतो ऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्वेति । ४ । निष्केवल्यस्य माहेन्द्रम् । ५ । प्रशास्त्रादीनामैन्द्रम् । ६ । तं वो दस्ममृतीषहं तत्त्वा यामि सुवीर्यमिति स्तोत्रियानुरूपौ । ७ । द्वे तिस्रः करोति पुनरादायम् । प्रथमां शस्त्वा तस्या उत्तमं पादमभ्यस्यावसायोत्तरस्या अर्धर्चेन द्वितीयां शस्त्वा तस्या उत्तमं पादमभ्यस्योत्तरेणार्धर्चेन तृतीयां शंसति । ८ । एवं बार्हतानां स्तोत्रियानुरूपाणां प्रग्रथनम् । ९ । मध्यमोत्रैस्तरया

वाचा शंस्तव्यौ । १० । उदु त्ये मधुमत्तमा इति सामप्रगाथः स्वरवत्या । ११ । इन्द्रः पूर्भिदातिरदित्युक्थमुखं पच्छः प्रतिवीततमया । १२ । उदु ब्रह्माण्यैरत श्रवस्येति पर्यासः । १३ । एवेदिन्द्रमिति परिदधाति । परया यजति । १४ । अच्छावाकभक्षादादित्यग्रहहोमं यद्देवा देवहेडनमिति द्वाभ्यां पवमानसर्पणान्तम् । १५ । आशिरं पूतभृत्यासिच्यमानमाशीर्ण ऊर्जमित्यनुमन्त्रयते । १६ । पवमानाय प्रस्तौति सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वेति । १७ । अवदानहोममाग्नेयम् । १८ । ऐन्द्राग्नमुक्थ्ये । ऐन्द्रं षोडशिनि । सारस्वतमतिरात्रे । १९ । पश्वेकादशिन्यामाग्नेयं सौम्यं वैष्णवं सारस्वतं पौष्णं बार्हस्पत्यं वैश्वदेवमैन्द्रमैन्द्राग्नं सावित्रं वारुणम् । २० । सवनीयहोमादिन्द्रश्च सोमं पिबतं बृहस्पत इति प्रस्थितयाज्याहोमानैन्द्रं मैत्रावरुणमैन्द्राबार्हस्पत्यं मारुतं त्वाष्ट्रमैन्द्रावैष्णवमाग्नेयम् ।२१। हविर्धाने यथाचमसं दक्षिणतः स्वेभ्य उपासनेभ्यस्त्रींस्त्रीन्पुरोडाशसंवर्तानेतत्ते प्रततामहेति निपृणन्ति । २२ । अत्र पितर इति जपित्वैतं भागमेतं सधस्थाः श्येनो नृचक्षा इत्यनुमन्त्रयते । २३ । ॥ १२ ॥ २२ ॥

आग्नीध्रीये हविरुच्छिष्टं भक्षयन्ति । १ । सावित्रग्रहहोमम् । २ । वैश्वदेवयाज्याया धिष्ण्यहोमादेभिरग्न इत्युपांशु पात्नीवतस्याग्नीध्रो यजति । ३ । तस्य होमम् । ४ । नेष्टुरुपस्थे धिष्ण्यान्ते वासीनो भक्षयति । ५ । अग्निष्टोमसाम्ने होत्रे प्रस्तौत्योजो ऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेति । ६ । ध्रुवं ध्रुवेणेति

ध्रुवमवनीयमानमनुमन्त्रयते । ७ । अग्निमारुतयाज्याहोमं प्रति त्वं चारुमध्वरमिति संप्रेषित आग्नीध्र इत्युक्तम् । ८ । हारियोजनहोममा मन्द्रैरिति । ९ । तेनैव निष्क्रामन्ति । १० । आग्नीध्रीये सर्वप्रायश्चित्तीयाञ्जुहोति । ११ । अग्नौ शाकलान्सर्वे देवकृतस्यैनसो ऽवयजनमसि स्वाहा । पितृकृतस्य । मनुष्यकृतस्य । आत्मकृतस्य । अनाज्ञाताज्ञातकृतस्य ।

यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनम् ।

अरावा यो नो अभि दुच्छुनायते तस्मिंस्तदेनो वसवो नि धत्तनेति ॥

देवहेडनस्य सूक्ताभ्यां च । १२ । द्रोणकलशाद्धाना हस्त आदाय भस्मान्ते निवपन्ते । १३ । चात्वालादपरेणाध्वर्य्वासादितानप्सु सोमचमसान्वैष्णव्यर्चा निनयन्ति । १४ ।

उभा कवी युवाना सत्याद्रा धर्मणस्परि ।

सत्यस्य धर्मणा वि सख्यानि सृजामह

इति सख्यानि विसृजन्ते । १५ । सं सख्यानीति संसृजन्ते ऽहर्गणे प्रागुत्तमात् । १६ । आग्नीध्रीये दधि भक्षयन्ति दधिक्राव्ण इति । १७ । पत्नीसंयाजेभ्यः शालामुखीयमुपविशति । १८ । दक्षिणासंचरेणाहवनीयमपरेणातिव्रज्य समिष्टयजुर्भ्यः संस्थितहोमाञ्जुहोति । १९ । अप्स्ववभृथेष्ट्यामप्सु त इति पुरस्ताद्धोमान्सावित्रकान्संस्थितहोमान्वारुणं त्वं नो अग्ने स त्वं न इति । २० । इडान्तानुयाजान्तेके । २१ । सोमलिप्तानि दध्नाभिजुहोत्यभूद्देवो द्रप्सवत्योर्यत्ते ग्रावेत्येतैः । २२ । ॥ १३ ॥ २३ ॥

यत्ते ग्रावा बाहुच्युतो अचुच्योन्नरो यद्वा ते हस्तयोर-
धुक्षन् ।
तत्त आप्यायतां तत्ते निष्ट्यायतां सोम राजन् ॥ a
यत्ते ग्राव्णा चिच्छिदुः सोम राजन्प्रियाण्यङ्गा सुकृता
पुरूणि ।
तत्संधत्स्वाज्येनोत वर्धयस्वानागसो यथा सदमित्सं-
क्षियेम ॥ b
यां ते त्वचं बिभिदुर्या च योनिं यद्वा स्थानात्प्रच्युतो य-
दि वासुतो ऽसि ।
त्वया सोम कृप्तमस्माकमेतदुप नो राजन्सुकृते ह्वयस्व ॥ c
सं प्राणापानाभ्यां समु चक्षुषा सं श्रोत्रेण गच्छस्व सो-
म राजन् ।
यत्ते विरिष्टं समु तत्त एतज्जानीतान्नः संगमने पथी-
नाम् ॥ d
अहाः शरीरं पयसा समेत्यन्यो अन्यो भवति वर्णो
अस्य ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयी-
णाम् ॥ e
अभिक्षरन्ति जुह्वो घृतेनाङ्गा परूंषि तव वर्धयन्ति ।
तस्मै ते सोम नम इद्वषट्चोप नो राजन्सुकृते ह्वय-
स्व ॥ f १ ।

कृष्णाजिनं निधाय संप्रोक्षति ।२। अपां सूक्तैरित्याद्युपस्प-
र्शनान्तम् ।३। उद्वयमित्युत्क्रामन्ति ।४। अपाम सोममग-

न्म स्वरित्याव्रजन्ति ।५। अपो दिव्या इत्याहवनीयमुपतिष्ठन्ते ।६। विमुञ्चामीत्यादि मार्जनान्तम् ।७। उदयनीया प्रायणीयावत् । पथ्यायाश्चतुर्थम् ।८। अन्तः ।९। संस्थानूबन्ध्यायामपराजितायां तिष्ठन्त्यां सपत्नहनमिति कामं नमस्करोति ।१०। यूपैकादशिनी चेद्वपामार्जना त्वाष्ट्रः पशुः ।११। पर्यग्निकृतस्योत्सर्गः ।१२। अस्याज्यावदानहोमं वशापशुपुरोडाशाद्देविकाहविषा ।१३। अयं ते योनिरित्यरण्योरग्निं समारोप्यमाणमनुमन्त्रयते । या ते अग्ने यज्ञिया तनूस्तया मे ह्यारोह तया मे ह्याविश । अयं ते योनिरित्यात्मन् ।१४। अपमित्यमप्रतीत्तमिति वेदिमुपोष्यमाणाम् ।१५। सक्तुहोमे विश्वलोप विश्वदावस्य त्वासञ्जुहोमीत्याह ।१६। यो अग्नाविति नमस्कृत्य तेनैव निष्क्रामन्ति ।१७। उपावरोहेति मथ्यमानमनुमन्त्रयते ।१८। इत्यग्निष्टोमः ।१९। अल्पस्व एकगुनापि यजेत ।२०। ॥ १४ ॥ २४ ॥

॥ इत्यथर्ववेदे वैतानसूत्रे तृतीयो ऽध्यायः समाप्तः ॥

अग्निष्टोमसाम्नो होत्रे षोडशिस्तोत्रेणात्यग्निष्टोमे। उक्थ्ये मैत्रावरुणादिभ्यः प्रसौति तन्तुरसि प्रजाभ्यस्त्वा प्रजां जिन्व। रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व। पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेति। १। एतेषां याज्याहोमानिन्द्रावरुणा सुतपौ बृहस्पतिर्न उभा जिग्यथुरिति। २। वयमु त्वामपूर्व्य यो न इदमिदं पुरेति स्तोत्रियानुरूपौ। ३। स्तोत्रियस्य प्रथमां शस्त्वा तस्या उत्तमं पादं द्वितीयस्याः पूर्वेण संधायावसाय द्वितीयेन द्वितीयां शंसति। तस्या एवोत्तममुत्तरेण संधायावसायोत्तमेन तृतीयाम्। ४। एवं काकुभानां स्तोत्रियानुरूपाणां प्रग्रथनम्। ५। इतः पच्छः शंसति। ६। प्र मंहिष्ठाय बृहते बृहद्रय इत्युक्थमुखम्। ७। उदप्रुतो न वयो रक्षमाणा इति बार्हस्पत्यं सांशंसिकम्। ८। अच्छा म इन्द्रं मतयः स्वर्विद इति पर्यासः। ९। इत्यैकाहिकानाम्। १०। उत्तमया परिदधाति परया यजति। ११। षोडशिनि ग्रहमुपतिष्ठन्ते

य आबभूव भुवनानि विश्वा यस्मादन्यन्न परं किंचनास्ति।

प्रजापतिः प्रजाभिः संविदानस्त्रीणि ज्योतींषि दधते स षोडशीति। १२।

होत्रे प्रसौत्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेति ।१३। षोडशिग्रहस्येन्द्र जुषस्वेति । इन्द्र षोडशिन्नोजः संस्थं देवेष्वसि । ओजस्वन्तं मामायुष्मन्तं मनुष्येषु कृणुहि । तस्य त उपहूतस्योपहूतो भक्षयामीति भक्षयन्ति द्वौद्वौ । त्रयश्छन्दोगाः ।१४। घर्मवत्सन्त्वे ।१५। ॥१॥२५॥

अतिरात्रे होत्रादिभ्यः प्रसौत्यधिपतिरसि प्राणाय त्वा प्राणं जिन्व । धरुणो ऽस्यपानाय त्वापानं जिन्व । संसर्पो ऽसि चक्षुषे त्वा चक्षुर्जिन्व । वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्वेति ।१। होमानैन्द्रान् । आश्विनादाश्विनम् ।२। स्तोत्रियानुरूपयोः प्रथमानि पदानि पुनरादायमर्धर्चशस्यवच्छंसति। मध्यमे पर्याये मध्यमानि। उत्तम उत्तमानि। ३। प्रातःसवनवदाहावोक्थसंपदावस्वरौ ।४। वयमु त्वा तदिदर्था वयमिन्द्र त्वायव इति स्तोत्रियानुरूपौ।५। ऊर्ध्वं सर्वत्र त्रीणि सूक्तानि। अन्त्यं पच्छः पर्यासः ।६। य उदृचीति परिधानीया । अप्सु धूतस्येति याज्या ।७। मध्यमे त्रिवृदसि त्रिवृते त्वा त्रिवृतं जिन्व । प्रवृदसि प्रवृते त्वा प्रवृतं जिन्व। स्ववृदसि स्ववृते त्वा स्ववृतं जिन्व। अनुवृदस्यनुवृते त्वानुवृतं जिन्वेति ।८। अभि त्वा वृषभा सुते ऽभि प्र गोपतिं गिरेति स्तोत्रियानुरूपौ ।९। बर्हिर्वा यत्स्वपत्यायेति परिधानीया । प्रोग्रां पीतिमिति याज्या ।१०। उत्तम आरोहो ऽस्यारोहाय त्वारोहं जिन्व । प्ररोहो ऽसि प्ररोहाय त्वा प्ररोहं जिन्व । संरोहो ऽसि संरोहाय त्वा संरोहं जिन्व। अनुरोहो ऽस्यनुरोहाय

त्वानुरोहं जिन्वेति । ११ । योगेयोगे तवस्तरं युञ्जन्ति ब्रध्नमरु-षमिति स्तोत्रियानुरूपौ । १२ । अपाः पूर्वेषामिति परिधा-नीया । ऊती शचीव इति याज्या । १३ । होत्र आश्विनाय प्र-सौति वसुको ऽसि वस्यष्टिरसि वेषश्रीरसि । वसुकाय त्वा व-स्यष्ट्यै त्वा वेषश्रियै त्वा । वसुकं जिन्व वस्यष्टिं जिन्व वेष-श्रियं जिन्वेति । १४ । एवं चतुःसंस्थो ज्योतिष्टोमो ऽत्यग्निष्टो-मवर्जम् । १५ । एष सोमानां प्रकृतिः । १६ । ॥ २ ॥ २६ ॥

वाजपेयः शरदि । १ । सर्वः सप्तदशः । २ । हिरण्यस्रज ऋ-त्विजः । ३ । मरुत्वतीयाद्बार्हस्पत्येष्टिः । ४ । आज्यभागादीडा-न्ता । ५ । यूपमारोहमाणो यजमान आह देवस्य सवितुः स-वे स्वर्गं वर्षिष्ठं नाकं रुहेयं पृष्ठात्पृथिव्या अहमिति । ६ । आ-रूढो यावन्न इति वीक्षते । ७ । अवरुह्य भूमे मातरिति यूप-वासांसि ब्रह्मणे ददाति । ८ । तीर्थदेशे रथचक्रमारुह्यापराजि-ताभिमुखो ऽश्वरथानीक्षमाण आसीनो वाजसामाभिगायति चिराविर्मेर्यो आ वाजं वाजिनो ऽग्मन् । देवस्य सवितुः स-वे स्वर्गमर्वन्तो जयेमेति । ९ । तद्वो गायेति स्तोत्रियः । १० । अभिप्लवस्तोत्रियानावपते । ११ । माध्यंदिन इन्द्र क्रतुं न आ भरेति स्तोत्रियः । इन्द्र ज्येष्ठमुदु त्ये मधुमत्तमा इति वा । १२ । कव्यो अतसीनामिति साम्प्रगाथः । १३ । अहीनसूक्तमाव-पते । १४ । तृतीयसवने य एक इद्विदयते य इन्द्र सोमपातम इत्युक्थस्तोत्रियानुरूपौ । १५ । ऊर्ध्वं षोडशिनो होत्रे नाभुर-सि सप्तदश प्रजापतिरसि प्रजापतिष्ट्वा प्रजापतिं जिन्वेति

। १६ । बृहस्पतिसवं परियज्ञमेके । १७ । अग्नोर्यामिणि गर्भकारं शंसति । १८ । युञ्जन्ति ब्रध्नमरुषमिति स्तोत्रियम् । अभित आ याहीति । १९ । भिन्धि विश्वा अप द्विष इत्यनुरूपम् । अभित आ नो याहीति । २० । वाजपेयवदावापः । २१ । माध्यंदिने यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति स्तोत्रियानुरूपौ । अभितःस्तोत्रियानुरूपौ सामप्रगाथात् ।२२। इन्द्र त्रिधातु शरणमिति सामप्रगाथः । २३ । सुकीर्तिवृषाकपी सामसूक्तमहीनसूक्तमावपते । २४ । तृतीयसवने सुरूपकृत्नुमूतये शुष्मिन्तमं न ऊतय इति स्तोत्रियानुरूपौ । अभितःस्तोत्रियानुरूपौ । २५ । शेषं पृष्ठ्यषष्ठवत्सातिरात्रम् । २६ । अतिरिक्तोक्थेषु होत्रादिभ्यः प्रसौत्याक्रमो ऽस्याक्रमाय त्वाक्रमं जिन्व । संक्रमो ऽसि संक्रमाय त्वा संक्रमं जिन्व । उत्क्रमो ऽस्युत्क्रमाय त्वोत्क्रमं जिन्व । उत्क्रान्तिरस्युत्क्रान्त्यै त्वोत्क्रान्तिं जिन्वेति । २७ । तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसेति स्तोत्रियानुरूपौ । उत्तरौ वा । २८ । आ नूनमश्विना युवं तं वां रथमिति सूक्ते । पूर्वस्य दशमीं द्वादशीमुत्तरं च पच्छः । २९ । मधुमतीरोषधीरिति परिधानीया । उत्तरा याज्या । ३० । ॥ ३ ॥ २७ ॥

॥ इत्यथर्ववेदे वैतानसूत्रे चतुर्थो ऽध्यायः समाप्तः ॥

क्षाममग्रथमयज्ञे ऽग्निः । १ । स महाव्रते नित्यम् । २ । फाल्गुन्यां सत्त्रे पौष्याम् । ३ । तद्गुणानुरोधात्प्राजापत्ये पशौ समिध्यमानवतीमनु समास्त्वाग्न इति जपति । ४ । य आत्मदा इत्यवदानानाम् । ५ । अष्टम्यामुखासंभरणीया । ६ । अष्टगृहीतस्यर्चा स्तोमर्मिति । ७ । परि त्वाग्न इति मृत्पिण्डं परिलिख्यमानम् । ८ । पुरीष्यो ऽसीत्यभिमृश्यमानम् । ९ । त्वामग्न इति पुष्करपर्णे निधीयमानम् । १० । आपो हि ष्ठेति पलाशपाणेनाभिषिच्यमानम् । ११ । पृथिवीं त्वा पृथिव्यामित्युखां क्रियमाणाम् । पुनःकरण इति भगलिः । १२ । तृतीयया पच्यमानाम् । १३ । आमावास्येनेष्टे दीक्षणीयायां वैश्वानरादित्ययोश्च यदग्ने यानि कानि चिदित्युख्ये समिध आधीयमानाः । १४ । संशितं म इत्युख्यमुन्नीयमानम् । १५ । आ त्वाहार्षमित्युन्नीतम् । १६ । उदुत्तममिति पाशानुन्मुच्यमानान् । १७ । संवत्सरमुख्यं बिभर्ति सद्यो वा । १८ । आ नो भरेति वनीवाहने वाचयति । १९ । गर्भो अस्योषधीनामित्युख्यं भस्माप्सूप्यमानम् । २० । सह रय्या निवर्तस्वेति द्वाभ्यामुपमादीयमानम् । २१ । पुनस्त्वेत्युख्ये समिध आधीयमानाः

। २२ । दीक्षान्ते वि मिमीष्वेति वेद्यग्निम् । २३ । अपेत वीतेति गार्हपत्यमुद्ह्यमानम् । २४ । अयं ते योनिरिति गार्हपत्येष्टका निधीयमानाः । २५ । नमो ऽस्तु ते निर्ऋत इति पित्र्युपवीती नैर्ऋतीः । २६ । यत्ते देवीति शिक्यासन्दीरुक्मपाशान्नैर्ऋत्यां प्रासने । २७ । अनपेक्षमाणा एत्य निवेशनः संगमन इत्यैन्द्र्या गार्हपत्यमुपतिष्ठन्ते । २८ । प्रायणीयादि । २९ । सीरा युञ्जन्तीति सीरं युज्यमानम् । ३० । लाङ्गलं पवीरवदिति कर्षमाणम् । ३१ । कृते योनावित्योषधीरावपन्तम् । ३२ । ब्रह्म जज्ञानमिति रुक्मं निधीयमानम् । ३३ । हिरण्यगर्भ इति हिरण्यपुरुषम् । ३४ । ॥ १ ॥ २८ ॥

मधु वाता इति कूर्ममभ्यज्यमानम् । १ । विष्णोः कर्माणीत्युलूखलमुसलं निधीयमानम् । २ । अजो हीत्यजशिरः । ३ । पूर्वाह्णिकीरुपसदो ऽनु चितीश्चिन्वन्ति । ४ । वार्त्रहत्याय शवसे वि न इन्द्र मृगो न भीमो वैश्वानरो न ऊतय इति चितिंचितिं पुरीषाच्छन्नाम् । ५ । अग्ने जातानिति द्वाभ्यां पञ्चम्यां चितावसपत्नेष्टका निधीयमानाः । ६ । एकान्नविंशत्स्तोमभागैः स्तोमभागिकीः । ७ । त्वामग्ने पुष्करादधीति गायत्रीरबोध्यग्निरिति त्रैष्टुभीः सं समिदित्यानुष्टुभीरग्निं होतारं मन्य इत्यतिच्छान्दसीर्गार्हपत्य उक्थम् । ८ । अयमग्निः सत्पतिर्येना सहस्रमिति पुनश्चितौ । ९ । मा नो देवा भवाशर्वौ मृडतं यस्ते सर्प इति रौद्रान् । १० । अश्मवर्म म इति परिश्रितः । ११ । हवनप्रासनादाग्नीध्रो या आपो दिव्या इति चितिं प-

रिषिञ्चति । १२ । इदं व आपो हिमस्य त्वोप द्यामुप वेतसम-
पामिदमिति मण्डूकावकावेतसैर्दक्षिणादिक्प्रतिदिशं विकृ-
ष्यमाणाम् । १३ । यो विश्वचर्षणिरित्यौपवसथ्ये षोडशगृही-
तार्धस्य । स नः पिता जनितेत्युत्तरार्धस्य । १४ । उदेनमुत्तरं न-
येति समिध आधीयमानाः । १५ । संप्रेषितो ऽप्रतिरथं जपति
। १६ । क्रमध्वमग्निनेति चतसृभिश्चितिमारोहन्ति । १७ । तां
सवितरिति समिध आधीयमानाः । १८ । चत्वारि शृङ्गाभ्यर्च-
तेति जपति । अग्ने अच्छेति तिस्रो । अर्यमणं बृहस्पतिमिति
द्वे । १९ । वाजस्य नु प्रसव इति वाजप्रसवीयहोमान् । २० ।
सं मा सिञ्चन्त्वित्यभिषिच्यमानं वाचयति । २१ । ये भक्षय-
न्त एतं सधस्था इति द्वे । २२ । येना सहस्रमिति वैश्वकर्मण-
होमान् । २३ । ॥ २ ॥ २९ ॥

अग्निचित्सोमातिपूतः सोमवामी सौत्रामण्याभिषिच्यते
। १ । उत्क्रान्तश्रेयसः श्रैष्ठ्यकामस्य । २ । नानिष्टसोमः । ३ ।
आदित्येष्टिः । ४ । ऐन्द्रः पशुः । ५ । रसप्राशन्या या बभ्रव इ-
त्योषधीभिः सुरां संधीयमानाम् । ६ । वायोः पूत इति सो-
मातिपूतस्य पाय्यमानाम् । ७ । सोमवामिनः प्राङ्सोम
इति विकृतेन । ८ ।

अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आसृज ।
पुनीहीन्द्राय पातवे

इत्यध्वर्युं पावयन्तम् । ९ । गृहीतेष्वाज्येषु कुविदङ्ग यवमन्त
इति पयोग्रहान्गृह्णन्तम् । १० । वपामार्जनाद्युवं सुराम-

श्विनेति चतसृभिः पयःसुराग्रहाणां सौराणां न भक्षणम् ।११।
आश्विनस्यैके

यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय ।

इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामीति । १२ ।

पुनन्तु मा गिरावरगराटेषु यज्ञिरिष्विति शतातृणामासिच्यमानाम् । १३ । उदीरतामिति द्वे बर्हिषदः पितर उपहूता नः पितरो ऽग्निष्वात्ता इति पञ्च जपति । १४ । आश्विनसारस्वतैन्द्रपशूनां वनस्पतियागादभिषिच्यमानमों भूर्भुवः स्वर्जनदोमिति वाचयति । १५ । सामगानाय प्रेषितः

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।

येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवीत्यैन्द्र्यां बृहत्यां संशानानि गायति।१६। सं त्वा हिन्वन्ति धा३यितायिभिः सं त्वा च्छृणन्ति सं त्वा शिषन्ति सं त्वा ततक्षुरिति प्रतिपदः ।१७। संश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति निधनानि।१८। संजित्यै विजित्यै सत्यजित्यै जित्या इति क्षत्रियस्य। संपुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य । १९ । सर्वे निधनमुपयन्ति । २० । बर्हिर्होमादवभृथः । २१ । यद्देवा इति मासरकुम्भं प्लाव्यमानम् । २२ । द्रुपदादिवेति वासः । २३ । मैत्रावरुण्यामिक्षेष्टिः । २४ । इन्द्राय वयोधसे पशुः । २५ । आदित्येष्टिः । २६ । दूरे चित्सन्तमिति प्रणवान्तया तानेन मन्त्रोक्तमुपतिष्ठन्ते । २७ । ॥ ३ ॥ ३० ॥

॥ इत्यथर्ववेदे वैतानसूत्रे पञ्चमो ऽध्यायः समाप्तः ॥

माघ्याः पुरस्तादेकादश्यां सप्तदशावराः सत्त्रमुपयन्तो ब्राह्मणोक्तेन दीक्षेरन् ।१। इष्टप्रथमयज्ञाः । गृहपतिर्वा ।२। तस्यामौ समोप्यामीन्प्राजापत्येन यजन्ते ।३। अह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेदयं नो नभसस्पतिरिति मन्त्रोक्तदेवताभ्यां संकल्पयन् ।४। यदि दहति पुण्यसमं भवत्यथ न दहति पापसमम् ।५। अथ गवामयनम् ।६। प्रायणीयचतुर्विंशमभिप्लवाश्चत्वारः पृष्ठ्य इति प्रथमो मासः ।७। एवं चत्वारः प्रायणीयचतुर्विंशवर्जम् ।८। त्रयो ऽभिप्लवाः पृष्ठ्यो ऽभिजित्स्वरसामान इति षष्ठः ।९। अतिरिक्त आत्मा विषुवान् ।१०। आवृत्त उत्तरः पक्षः ।११। स्वरसामानो विश्वजित्पृष्ठ्यो ऽभिप्लवाश्चत्वार इति सप्तमः ।१२। एवं चत्वारः स्वरसामविश्वजिद्वर्जम् ।१३। अभिप्लवौ गवायुषी दशरात्र ऊर्ध्वस्तोमो महाव्रतमुदयनीय इति द्वादशः ।१४। तदेतच्छ्लोको ऽभिवदति

द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे विंशतिशते उक्थ्यानाम् ।

द्वादश षोडशिनः षष्टिः षडहा वैषुवतं चेति ।१५।

चतुर्विंश इन्द्रमिद्गाथिनो बृहदित्याज्यस्तोत्रियः । इन्द्रा याहि चित्रभानो इति वा ।१६। आभिप्लविकांस्तृतीयादीन्स्तोत्रियानावपते ।१७। अभि प्र वः सुराधसं प्र सु श्रुतं सुराधसमिति पृष्ठस्तोत्रियानुरूपौ बार्हतौ प्रगाथौ । मा चिदन्यद्वि शंसत यच्चिद्धि त्वा जना इम इति वा ।१८। अस्मा इदु प्र तवसे तुरायेत्यहीनसूक्तमावपते ।१९। अभिजिति विषुवति विश्वजिति महाव्रते च य एक इद्विदयते य इन्द्र सोमपातम इत्युक्थस्तोत्रियानुरूपौ ।२०। अभिप्लव आ याहि सुषुमा हि त इति षडाज्यस्तोत्रिया आरम्भणीयापर्यासवर्जम् ।२१। वार्त्रहत्याय शवसे शुष्मिन्तमं न ऊतय आ तू न इन्द्र मद्र्यगुप नः सुतमागहि यदिन्द्राहं यथा त्वमपामूर्मिर्मदन्निवेति तृचानावपते ।२२। तं वो दस्ममृतीषहमिति पृष्ठस्तोत्रियानुरूपौ ।२३। अभि प्र वः सुराधसमिति युग्मेषु ।२४। इन्द्रः पूर्भिदातिरद्दासमर्कैर्य एक इद्धव्यश्चर्षणीनां यस्तिग्मशृङ्गो वृषभो न भीम इति संपातानामेकैकमहरहरावपते । पृष्ठ्ये छन्दोमेषु दशमे च ।२५। मध्यमेष्वेवा ह्यसि वीरयुरित्युक्थस्तोत्रियानुरूपाः ।२६। पृष्ठ्यषष्ठे वनोति हि सुन्वन्क्षयं परीणसो विश्वेषु हि त्वा सवनेषु तुञ्जत इति पारुच्छेपीरुपदधाति त्रयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानाम् । यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिरित्यृतुयाज्यानामुपरिष्टात् ।२७। ॥ १ ॥ ३१ ॥

षडहे ऽभिप्लववदाज्यस्तोत्रियाः । प्रथमयोरावापः पृष्ठस्तोत्रियानुरूपौ च ।१। तृतीये वाजेषु सासहिर्भवेति षड्ऋचः ।२।

चतुर्थे पुरुष्टुतस्य धामभिरिति नव। ३। पञ्चमे यद्दिन्द्राहं यथा त्वमिति पञ्चदश। ४। षष्ठे ऽभि प्र गोपतिं गिरेत्येकविंशतिः। ५। तृतीयादीनां वयं घ त्वा सुतावन्त इति पृष्ठस्तोत्रियानुरूपाः। ६। चतुर्थे तुभ्येदिमा सवना शूर विश्वेति षट् पुरस्तात्संपाताः। तिस्रो ऽर्धर्चशः। ७। पञ्चमे यच्चिद्धि सत्य सोमपा इति पाङ्क्तं सप्तर्चम्। द्वौद्वाववसाय पञ्चमं संतनोति। त्र्यं वावसाय द्व्यम्। ८। षष्ठे वि त्वा ततस्रे मिथुना अवस्यव इति सप्त। पदानामेकैकमवसाय त्र्यं संतनोति। द्व्यमवसाय द्व्यम्। ९। वने न वा यो न्यधायि चाकन्नित्यष्टर्चं च। १०। मध्यमेष्वभिप्लववदुक्थस्तोत्रियानुरूपाः। ११। षष्ठ इमा नु कं भुवना सीषधाम हत्वाय देवा असुरान्यदायन्निति द्वैपदी पङ्क्तिः। १२। अपेन्द्र प्राचो मघवन्नमित्रानिति सुकीर्तिम्। चतुर्थीमर्धर्चशः। १३। वि हि सोतोरसृक्षतेति वृषाकपिं पदावग्राहमनवानम्। द्वितीयेष्ववस्यति। तृतीयेषु द्वितीयान्त्यस्वरयोस्तदाद्योश्च न्यूङ्खनिनर्दान्कृत्वा त्र्यं संतनोति। १४। न्यूङ्खप्रतिगरेषु प्रथमचतुर्थाष्टमद्वादशेषु प्लुतिः। निनर्देष्वाद्यतृतीययोः। मध्यमः स्वरितः। १५। निदर्शनम्। १६। वि हि सोतोरसृक्षत नेन्द्रं देवममंसत। यत्रो३ ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३ मदद्वृषाकपो३ ओ ओ३ अर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरोम्। परा हीन्द्रेति। १७। प्रतिगर ओ३ ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३। निनर्दस्य मदेथ मदैवो३ ओ ओ३थामो दैवेति। १८। इदं जना उप श्रुते-

ति कुन्तापमर्धर्चशः । चतुर्दश पदावग्राहम् । १९ । एता अ-श्वा आ प्लवन्त इत्यैतशप्रलापं पदावग्राहम् । तासामुत्तमेन पदेन प्रणौति । २० । विततौ किरणौ द्वाविति प्रवल्हिकाः । २१ । इहेत्थ प्रागपागुदगधरागिति प्रतिराधान् । न संतनोति । २२ । भुगित्यभिगत इत्याजिज्ञासेन्यास्तिस्रः । २३ । प्रवल्हिकादिषु पञ्चदश प्रतिगराः । २४ । दुन्दुभिमाहननाभ्यां जरितरोथामो दैव । कोशबिले । रजनि ग्रन्थेर्दानम् । उपानहि पादम् । उत्तमाञ्जनिमाञ्जन्याम् । उत्तामाञ्जनी न्वर्मन्यात् । अलाबूनि । पृषातकानि । अश्वत्थपलाशम् । पिपीलिकावटः । चमसः । विप्रुट् । श्वा । पर्णशदः । गोशफो जरितरिति पूर्वासु पूर्वेषु । २५ । वीमे देवा अक्रंसतेत्यतीवादम् । २६ । पत्नी यदृश्यते जरितर्होता विष्टीमेन जरितरिति प्रतिगरौ । २७ । आदित्या ह जरितरिति देवनीथमैतशप्रलापवत् ।२८। ओं ह जरितस्तथा ह जरितरिति प्रतिगरौ व्यत्यासम्।२९। त्वमिन्द्र शर्म रिणेति भूतेच्छदः ।३०। यदस्या अंहुभेद्या इत्याहनस्या वृषाकपिवत् । ३१ । प्रतिगर ईकारः । निनर्दस्य किमयमिदमाहो३ ओ ओ३थामो दैवेति । ३२ । दधिक्राव्णो अकारिषमित्यर्धर्चशः । सुतासो मधुमत्तमा इति पावमानीः । अव द्रप्सो अंशुमतीमतिष्ठदिति पच्छः । ३३ । अस्योत्तमया परिदधाति नित्यया वा । ३४ । ऐन्द्राजागतमुत्सृजन्त्येके । ऐन्द्राबार्हस्पत्यं तृचमन्यमैन्द्राजागतं च शस्त्वेत्यपरे । ३५ ।
॥ २ ॥ ३२ ॥

नवरात्रे ऽभिजिद्विषुवान्विश्वजिच्चतुर्विंशवदुक्थ्यवर्जम् । आभिप्लविकांस्तु सर्वान् ।१। अभि त्वा वृषभा सुत उद्वेदभि श्रुतामघं युञ्जन्ति ब्रध्नमरुषं चरन्तमित्याज्यस्तोत्रियाः ।२। स्वरसामस्त्वा याहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहदिन्द्रेण सं हि हक्षस इति ।३। शेषमभिप्लवस्य द्वितीयादि त्र्यहवत् । पञ्चर्चेस्त्वावापः ।४। विषुवति सौर्यपृष्ठ उदु त्यं जातवेदसमिति षट् स्तोत्रियः ।५। चित्रं देवानामुदगादनीकं तत्सूर्यस्य देवत्वं तन्महित्वमिति पृष्ठस्तोत्रियानुरूपौ । बरामहाँ असि सूर्य आयन्त इव सूर्यमिति वा । इन्द्र क्रतुं न आ भरेन्द्र ज्येष्ठं न आ भरेति वा । नित्यौ वा ।६। उत्तरे पक्षे ऽनुरूपान्तं वो दस्ममृतीषहमभि प्र वः सुराधसमिति नौधसश्यैतयोनी ।७। कामं वैश्वानरस्य प्रतिमोपरि द्यौश्चिचश्चिकित्वान्महिषः सुपर्ण इति सूक्तशेषावावपते ।८। विश्वजिति वैराजपृष्ठे यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति पृष्ठस्तोत्रियानुरूपौ ।९। बार्हतावुक्ते योनी । इन्द्र क्रतुं न आ भरेति तृतीयाम् ।१०। इन्द्र त्रिधातु शरणमिति सामप्रगाथः ।११। सुकीर्तिवृषाकपी यो जात एव प्रथमो मनस्वानिति सामसूक्तमहीनसूक्तमावपते ।१२। दशरात्र उक्तः ।१३। पृष्ठ्यच्छन्दोमेष्विन्द्रा याहि चित्रभानो तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसेत्याज्यस्तोत्रियाः ।१४। सुरूपकृत्नुमूतय इति द्वादशर्चः । स घा नो योग आ भुवदिति द्वात्रिंशतम् । वीलु चिदारुजत्नुभिरिति षट्त्रिंशतमावपते ।१५। वयं घ त्वा सुतावन्त इत्यादि बरामहाँ असि सूर्येत्यन्ताः पृष्ठस्तोत्रियानुरूपौ ।१६। उत्तरयोरष्ट-

चेमा सत्यो यातु मघवाँ ऋजीषीति चावपते । १७ । अ-न्येषु महास्तोत्रेष्वष्टर्चेषु य एक इद्विदयत षडुक्थस्तोत्रियानुरूपौ । १८ । द्वितीये ऽध्वर्यवो ऽरुणं दुग्धमंशुं यस्तस्तम्भ सहसा वि ज्मो अन्तानस्तेव सु प्रतरं लायमस्यन्नित्यैकाहिकानि । १९ । तृतीये ऽध्वर्यवो ऽरुणं यो अद्रिभित्प्रथमजा ऋतावा यात्विन्द्रः स्वपतिर्मदायेति । २० । यो अद्रिभिदिमां धियं सप्तशीर्ष्णीं पिता न इत्युभयोरेकैकं मध्यमस्यादावन्ते वा । २१ । दशमं पृष्ठ्यचतुर्थवदुक्थ्यवर्जम् । २२ । उस्त्रा मन्दन्त्वित्याज्यस्तोत्रियः । २३ । उदु त्ये मधुमत्तमा उदिन्न्वस्य रिच्यत इति पृष्ठस्तोत्रियानुरूपौ । २४ । पत्नीसंयाजेभ्यो मानसस्तोत्राय कृतसंज्ञाः सदो ऽभिव्रजन्ति । २५ । मनसा सर्वमभ्रेषे । २६ । होत्र आरोहो ऽसि मानसो मनसे त्वा मनो जिन्वेति प्रसौति । २७ । आयं गौरिति चानुमन्त्रयते । २८ । धृतिरसि स्वधृतिरसीत्यौदुम्बरीं मध्ये ऽन्वालभ्यासते । २९ । ॥ ३ ॥ ३३॥

प्रादुर्भूतेषु नक्षत्रेषु निष्क्रम्य जपन्ति

युवं तमिन्द्रापर्वता पुरोयोधा यो नः पृतन्यादप तंतमिद्धतं वज्रेन तंतमिद्धतम् ।

दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् ।

अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वत इति । १ । अध्वर्युपथेन गत्वा दक्षिणपश्चादग्नेरुपविश्य कामान्कामयित्वा यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं तत्पितरमप्येत्विति । २ । तिष्ठन्तो वाचमाह्वयन्ते वागेतु वागुपैतु वा-

गुप मैतु वागिति । ३ । सुब्रह्मण्यां च । ४ । अनधीयानः सुब्रह्मण्योऽमिति चिः । ५ । महाव्रते सुरूपकृत्नुमूतय इत्याज्यस्तोत्रियः । ६ । ईङ्खयन्तीरपस्युव इत्यावपते । अभिप्लवस्तोत्रियांश्च माध्यंदिने । ७ । होत्रकाः कूर्चान्कृत्वोपविशन्ति । ८ । कुम्भिनीर्मार्जालीयं परियान्तीरनुमन्त्रयते

गाव एव सुरभयो गावो गुग्गुलुगन्धयः ।
गावो घृतस्य मातरस्ता इह सन्तु भूयसीरिदं मधु ॥ a
न वै गावो मङ्गीरस्य गङ्गाया उदकं पपुः ।
पपुः सरस्वत्या नद्यास्ताः प्राच्यः संजिगाइर इदं मधु ॥b
एता वयं प्लवामहे शम्याः प्रतरता इव ।
निकीर्ये तुभ्यमभ्य आसं गीः कोश्वोथ्यौयदा गिर इदं मधु ॥ c
यदाराघटी वरदो व्याघ्रं मङ्गीरदास गौः ।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षित इति ॥d ९ ।

इदं मध्विदं मध्विति । १० । पत्नीशाले भूमिदुन्दुभिमौष्ट्रेणाभिनह्य पुच्छेनाघ्नन्त्युच्चैर्घोष उप श्वासयेति । ११ । तीर्थदेशे राजानमन्यं वा मर्माणि त इति । १२ । संनद्धमिन्द्रो जयातीत्यनुमन्त्रयते । १३ । संनद्धाय मधुपर्कमाहारयति । तं स ब्रात्यनुमन्त्रयते । १३ । संनद्धाय मधुपर्कमाहारयति । तं स ब्रा-

लक्षणेन प्रतिग्राहयति । १४ । वनस्पते वीड्वङ्ग इत्यभिमन्त्रितं रथमारोहयति । १५ । उद्धर्षन्तामित्यारूढमनुमन्त्रयते । १६ । अवसृष्टा परा पतेति चतुर्थीमिषुमवसृष्टम् । १७ । स यदा आव्याधनं गृह्णाति तद्यजमानो निष्क्रीणाति । १८ । त्रिकद्रुकेषु महिषः प्रो ष्वस्मै पुरोरथमिति स्तोत्रियानुरूपौ । १९ ।

तीव्रस्याभिवयसो अस्य पाहीति चतुर्विंशतिमावपते । २० । अथ ज्योतिष्टोमेनाग्निष्टोमेनात्मनिष्क्रयणेन सहस्रदक्षिणेन पृष्ठशमनीयेन त्वरेत । २१ । ॥ ४ ॥ ३४ ॥

यथास्तुतमनुशंसति । १ । एकया द्वाभ्यां वा स्तोममतिशंसेत् । न प्राग्द्वादशात् । २ । षडहस्तोत्रियावापे च । ३ । अपरिमिताभिरुत्तरयोः सवनयोः । ४ । छन्दोदैवतप्रतिरूपो ऽनुरूपः । ५ । अप्रज्ञाने स्तोत्रियं द्विरेकाहेषु । ६ । ऊर्ध्वमनुरूपादावापः । ७ । प्रगाथान्माध्यंदिने । ८ । संवत्सर आरम्भणीयायाश्च स्तोत्रियानुरूपः । ९ । इन्द्रं वो विश्वतस्परीत्यारम्भणीया । १० । व्यन्तरिक्षमतिरदिति पर्यासः । ११ । माध्यंदिने कन्व्यो अतसीनामिति कद्वान्सामप्रगाथः । १२ । ब्रह्मणा ते ब्रह्मयुजा युनज्मीत्यारम्भणीया । १३ । अतिशंसनाय स्तोमान्व्याख्यास्यामः । १४ । गोराज्ये त्रिवृत् । पञ्चदश आयुषः । उभयोः पृष्ठे सप्तदशः । १५ । उक्थ्य एकविंशः । पृष्ठे त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः । १६ । अभिजिद्विश्वजितोराज्ये पञ्चदशैकविंशौ । पृष्ठे त्रिणवत्रयस्त्रिंशौ । १७ । स्वरसामसु सप्तदशः । १८ । विषुवत्येकविंशः । १९ । छन्दोमेषु चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाः । २० । दशम आज्यपृष्ठयोरेकविंशः । २१ । महाव्रते पञ्चविंशः । २२ । सर्वत्र संस्थास्तोमस्तोत्रियं सामवेदप्रत्ययम् । २३ । ॥ ५ ॥ ३५ ॥

॥ इत्यथर्ववेदे वैतानसूत्रे षष्ठो ऽध्यायः समाप्तः ॥

अथ राजसूयः । १ । तैष्याः पुरस्तात्पविचः । २ । मासान्तरेषु दश संसृपः । ३ । माघ्या अभिषेचनीयः । ४ । मरुत्वतीयाद्बार्हस्पत्येष्टिः । ५ । हविर्धानयोः पुरस्ताद्वैयाघ्रं चर्म । ६ । उपबर्हणायामासन्द्यां भूतो भूतेष्वित्यारोहयत्यभिषिञ्चति च । ७ । फाल्गुन्या दशपेयः । ८ । सांवत्सरिकाणि चातुर्मास्यानि । ९ । संस्थितेषु चैत्र्याः प्रत्यवरोहणीयः । १० । वैशाख्या व्युष्टिद्विरात्रः । ११ । ज्यैष्ठ्याः क्षत्रधृतिः । १२ । आषाढ्याः पविचः संस्थित्यै । १३ । अथाश्वमेधः । १४ । फाल्गुन्या ब्रह्मौदनमुद्गातृचतुर्थेभ्यो ददाति । १५ । हुतायां प्रातराहुतौ ब्रह्मणे वरम् । १६ । आग्नेयीष्टिः पौष्णी च । १७ । वातरंहा भवेत्यश्वं नियुज्यमानमनुमन्त्रयते । १८ । अभि त्वा जरिमाहितेत्युन्मुच्यमानम् । १९ । आशापालीयेनोत्सृष्टं संवत्सरम् । २० । सावित्र्यस्तिस्र इष्टयः । २१ । पारिप्लवाख्यानाय दक्षिणेन वेदिं हिरण्मयेष्वासनेषूपविशन्ति । २२ । कशिपूपबर्हणं ब्रह्मणः । कूर्चो यजमानस्य । २३ । आख्यानेषु यथावेदं व्याहृतीर्वाचयति । २४ । संवत्सरान्ते दीक्षणम् । एकविंशतिर्दीक्षाः

। २५ । अभिप्लवप्रथमवत्प्रथममहः । पृष्ठ्यचतुर्थवद्द्वितीयम् । २६ । बहिष्पवमानादश्वं नियुज्यमानमनुमन्त्रयते

सं त्वां गन्धर्वाः समु युञ्जन्त्वापो नद्योः सांविद्ये परिवत्सराय ।

ये त्वा रक्षन्ति सदमप्रमादं तेभ्य आयुः सविता बोधि गोपायेति ॥ २७ ।

दिव्यो गन्धर्व इत्येतया कौशिकः । २८ । संज्ञप्तं महिषीमुपवेश्याधीवाससा संप्रोर्णुवन्ति । २९ । तौ यजमानोऽभिमेथति

स्वर्गेण लोकेन संप्रोर्णुवाथामधाम सक्थ्योरव गुदं धेहि ।

अर्वाञ्चमञ्जिमाभर यत्स्त्रीणां जीवभोजनमिति । ३० ।

होत्रभिमेथनादेवं वावातां ब्रह्मा

ऊर्ध्वामेनामुच्छ्रयतात्गिरौ भारं हरन्निव ।

अथास्यै मध्यमेधतु शीते वाते पनन्निवेति ॥ ३१ ।

ऊर्ध्वमेनमित्यनुचर्यो ब्रह्माणम् । ३२ । सदसि होत्रध्वर्व्योर्ब्रह्मोद्गात्रोर्ब्रह्मोज्ञातारं पृच्छति । ३३ । ॥ १ ॥ ३६ ॥

पृच्छामि त्वा चितये देवसख यदि त्वं तत्र मनसा जगन्थ ।

केषु विष्णुस्त्रिषु पदेषु जिष्णुः केष्विदं विश्वं भुवनमाविवेशेति । १ ।

तस्य प्रतिप्रश्नादाह

पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुष आर्पितानि।

एतस्माच्च प्रतिमन्वानो अस्मि न यज्ञपा भवस्युत्तरो मत् ॥

न त्वं परो वरो मन्न पूर्वः किमङ्ग वा मतिमन्यसे तेन।
शिक्षेण्यां वदसि वाचमेनां न मया त्वं संसमको भवासीति । २ ।

निष्क्रम्य सर्वे यजमानं पृच्छामि त्वा परमन्तं पृथिव्या इति । इयं वेदिरिति यजमानः । ३ । तृतीये चतुर्विंशवद्वे सवने ।४। प्राकृतावाज्यस्तोत्रियानुरूपौ । ५ । तृतीयसवनाद्यतिरात्रवत् । ६ । संस्थिते पञ्चपशुर्विशाखयूपः ।७। प्रत्यृतु षट् पशव आग्नेया ऐन्द्रा मारुता मैत्रावरुणा ऐन्द्रावरुणा आग्नावैष्णवा इति । ८ । विशाखयूपर्तुपशवो द्विगुणाः पुरुषमेधे । चतुर्गुणाः सर्वमेधे । ९ । पुरुषमेधो ऽश्वमेधवत् । १० । चैत्र्याः पुरस्ताद्वरदानान्ताः । ११ । इष्टयो ऽग्नये कामाय दात्रे पथिकृते । १२ । यजमानस्य विजितं सर्वं समैत्विति जनपदमुच्चैः श्रावयति ।१३। कस्मै सहस्रं शताश्वं स्वं ज्ञातिभ्यो दद्याम् । केन समाप्नुयामिति यजमानः । १४ । यदि ब्राह्मणः क्षत्रियो वा प्रतिपद्येत सिद्धं कर्मेत्याचक्षते । १५ । न चेत्प्रतिपद्येत नेदिष्ठं सपत्नं विजित्य तेन यजेत । १६ । तस्मै ज्ञातिभ्यस्तद्दद्यात् ।१७। यस्य स्त्री संभाषेत तस्य सर्वस्वमादाय तामब्राह्मणीं हनिष्य इत्युच्चैः श्रावयेत् । १८ । तं ह स्नातमलंकृतमुत्सृज्यमानं सहस्रबाहुः पुरुषः केन पार्ष्णी इत्यनुमन्त्रयते । १९ । संवत्सरमिष्टयः पथ्यायै स्वस्तये अदित्या अनुमतये । २० । संवत्सरान्त ऐन्द्रापौष्णः पशुः । २१ । महाव्रतं तृतीयम् । २२ । उदीरता-

मिति तिसृभिर्यूपे बध्यमानमनुमन्त्रयते। उत्थापनीभिश्च वि-
मुच्यमानम् । २३। हरिणीभिः शामित्रे ह्रियमाणम् । २४।
स्योनास्मै भवेति द्वाभ्यां निपात्यमानम् । २५। सहस्रबाहुया-
मसारस्वतैः संज्ञप्तम् । २६ । ॥ २ ॥ ३७ ॥

अथ भैषज्याय यजमानमक्षीभ्यां ते मुञ्चामि त्वोत देवा
यस्यास्ते ऽपेत एतु वात आ वात्विति मेथने ब्रह्मा। १। सु-
प्रपाणा च वेशन्तेति पूर्वेणानुचर्यः । २। उदीर्ष्व नारीत्यु-
त्तम् । ३। यत्र इदं पितृभिरिति सर्वे। ४। ब्रह्मोद्यात्

गावो यवं प्रयुता अर्यो अक्षन्ता अपश्यं सहगोपाश्च-
रन्तीः ।

हवा इदर्यो अभितः समायन्कियदासु स्वपतिश्छन्दयात
इत्युज्ञातारम् । ५। प्रतिप्रश्ने

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभि मन्याते
अन्धाम् ।

कतरो मेनिं प्रति तं मुञ्चाते य ईं वहाते य ईं वा
वरेयादिति । ६ ।

पृष्ठ्यचतुर्थे चतुर्थम् । अतिरात्रः पञ्चमम् । ७। मध्यमं चे-
दुक्थ्याग्निष्टोमौ । ८। उत्तमे साश्वमेध ऋत्विक्पत्नीप्रैषकृ-
तो द्वयाः । ९। द्व्यहो ऽश्वमेधस्य त्र्यहः पुरुषमेधस्य सर्वमेधः
पुरुषमेधवत् ।१०। अहान्यमिष्टुदिन्द्रस्तुत्सुर्यस्तुद्वैश्वदेवस्तुत्पौरुष-
मेधिकं तृतीयं पञ्चमं वाजपेयो ऽप्तोर्यामा । ११। एतस्मि-

न्सर्वान्मेधानालभन्ते । १२ । पृष्ठ्योत्तमे विश्वजिदतिरात्रो द-
शमम् । १३ । संवत्सरान्ते गार्हपत्ये ऽधरारणिं प्रहृत्याहव-
नीय उत्तरारणिमयं ते योनिरित्यात्मन्नग्निं संस्पृश्यारण्याय प्र-
व्रजेत् । १४ । इति मेधाः क्षत्रियस्य । १५ । ॥ ३ ॥ ३८ ॥

॥ इत्यथर्ववेदे वैतानसूत्रे सप्तमो ऽध्यायः समाप्तः ॥

अथ स्तोत्रियविकाराः । १ । एकाहेषु तं ते मदं गृणीमसीति । २ । बृहस्पतिसवे तद्वो गाय सुते सचा वयमेनमिदा ह्य इति सवनयोरुक्थमुखीयतृचपर्यासौ । माध्यंदिने पर्यासाद्यतृचवर्जम् । ३ । गोसवाभिषेचनीययोर्युञ्जन्ति ब्रध्नमरुषमिति । ४ । श्येनसंदंशाजिरवज्रेषु सुरूपकृत्नुमूतय उत्त्वा मन्दन्तु स्तोमास्त्वामिद्धि हवामह इति । ५ । अपूर्वे ऽभि त्वा पूर्वपीतय इति । ६ । व्रात्यस्तोमेष्वा त्वेता नि षीदतताधा हीन्द्र गिर्वण इति । ७ । अग्निष्टुत्स्वीळेन्यो नमस्यो ऽग्निं दूतं वृणीमहे ऽग्निमीळिष्वावसे ऽग्न आ याह्यग्निभिरिति । ८ । तीव्रसुदुपशदोपहव्येष्वयमु ते समतसीमा उ त्वा पुरूवसो इति व्युष्टिद्व्यहे च । ९ । गोसवविवधवैश्यस्तोमेष्विन्द्रं वो विश्वतस्परि यो विश्वासु हव्य इति । १० । प्रतीचीनस्तोमे त्वमिन्द्र प्रतूर्तिष्विति । ११ । राज्ञि यो राजा चर्षणीनामिति । १२ । उद्भिद्वलभिदोर्यज्ञ इन्द्रमवर्धयदिति । १३ । इन्द्रस्तोम इन्द्र क्रतुं न आ भर तव त्यदिन्द्रियं बृहदिति । १४ । विघने समस्य मन्यवे विशस्तदिदास भुवनेषु ज्येष्ठमिति । १५ । सूर्यस्तुत्युदु त्यं जातवेदसं चित्रं देवानां केतुरनीकमिति । १६ । वज्रे पुनःस्तोमे

